# सप्तमुखीहनुमत्कवचम्

।। श्रीगणेशाय नमः ।।

ॐ अस्य श्रीसप्तमुखीवीरहनुमत्कवचस्तोत्रमन्त्रस्य ,
नारदऋषिः , अनुष्टुप्छन्दः ,श्रीसप्तमुखीकपिः परमात्मादेवता ,
ह्रां बीजम् , ह्रीं शक्तिः , ह्रूं कीलकम् ,मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ।
ॐ ह्रां अङ्गुष्ठाभ्यां नमः ।
ॐ ह्रीं तर्जनीभ्यां नमः ।
ॐ ह्रूं मध्यमाभ्यां नमः ।
ॐ ह्रैं अनामिकाभ्यां नमः ।
ॐ ह्रौं कनिष्ठिकाभ्यां नमः ।
ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।
ॐ ह्रां हृदयाय नमः ।
ॐ ह्रीं शिरसे स्वाहा ।
ॐ ह्रूं शिखायै वषट् ।
ॐ ह्रैं कवचाय हुं ।
ॐ ह्रौं नेत्रत्रयाय वौषट् ।
ॐ ह्रः अस्त्राय फट् ।
अथ ध्यानम् ।
वन्देवानरसिंहसर्परिपुवाराहाश्वगोमानुषैर्युक्तं
सप्तमुखैः करैर्द्रुमगिरिं चक्रं गदां खेटकम् ।
खट्वाङ्गं हलमङ्कुशं फणिसुधाकुम्भौ शराब्जाभयान्
शूलं सप्तशिखं दधानममरैः सेव्यं कपिं कामदम् ॥

ब्रह्मोवाच ।
सप्तशीर्ष्णः प्रवक्ष्यामि कवचं सर्वसिद्धिदम् ।
जप्त्वा हनुमतो नित्यं सर्वपापैः प्रमुच्यते ॥ १॥

सप्तस्वर्गपतिः पायाच्छिखां मे मारुतात्मजः ।
सप्तमूर्धा शिरोऽव्यान्मे सप्तार्चिर्भालदेशकम् ॥ २॥

त्रिःसप्तनेत्रो नेत्रेऽव्यात्सप्तस्वरगतिः श्रुती ।
नासां सप्तपदार्थोऽव्यान्मुखं सप्तमुखोऽवतु ॥ ३॥

सप्तजिह्वस्तु रसनां रदान्सप्तहयोऽवतु ।
सप्तच्छन्दो हरिः पातु कण्ठं बाहू गिरिस्थितः ॥ ४॥

करौ चतुर्दशकरो भूधरोऽव्यान्ममाङ्गुलीः ।
सप्तर्षिध्यातो हृदयमुदरं कुक्षिसागरः ॥ ५॥

सप्तद्वीपपतिश्चित्तं सप्तव्याहृतिरूपवान् ।
कटिं मे सप्तसंस्थार्थदायकः सक्थिनी मम ॥ ६॥

सप्तग्रहस्वरूपी मे जानुनी जङ्घयोस्तथा ।
सप्तधान्यप्रियः पादौ सप्तपातालधारकः ॥ ७॥

पशून्धनं च धान्यं च लक्ष्मीं लक्ष्मीप्रदोऽवतु ।
दारान् पुत्रांश्च कन्याश्च कुटुम्बं विश्वपालकः ॥ ८॥

अनुक्तस्थानमपि मे पायाद्वायुसुतः सदा ।
चौरेभ्यो व्यालदंष्ट्रिभ्यः शृङ्गिभ्यो भूतराक्षसात् ॥ ९॥

दैत्येभ्योऽप्यथ यक्षेभ्यो ब्रह्मराक्षसजाद्भयात् ।
दंष्ट्राकरालवदनो हनुमान् मां सदाऽवतु ॥ १०॥

परशस्त्रमन्त्रतन्त्रयन्त्राग्निजलविद्युतः ।
रुद्रांशः शत्रुसङ्ग्रामात्सर्वावस्थासु सर्वभृत् ॥ ११॥

ॐ नमो भगवते सप्तवदनाय आद्यकपिमुखाय वीरहनुमते
सर्वशत्रुसंहारणाय ठंठंठंठंठंठंठं ॐ नमः स्वाहा ॥ १२॥

ॐ नमो भगवते सप्तवदनाय द्वीतीयनारसिंहास्याय अत्युग्रतेजोवपुषे
भीषणाय भयनाशनाय हंहंहंहंहंहंहं ॐ नमः स्वाहा ॥ १३॥

ॐ नमो भगवते सप्तवदनाय तृतीयगरुडवक्त्राय वज्रदंष्ट्राय
महाबलाय सर्वरोगविनाशाय मंमंमंमंमंमंमं ॐ नमः स्वाहा ॥ १४॥

ॐ नमो भगवते सप्तवदनाय चतुर्थक्रोडतुण्डाय सौमित्रिरक्षकाय
पुत्राद्यभिवृद्धिकराय लंलंलंलंलंलंलं ॐ नमः स्वाहा ॥ १५॥

ॐ नमो भगवते सप्तवदनाय पञ्चमाश्ववदनाय रुद्रमूर्तये सर्व-
वशीकरणाय सर्वनिगमस्वरूपाय रुंरुंरुंरुंरुंरुंरुं ॐ नमः स्वाहा ॥ १६॥

ॐ नमो भगवते सप्तवदनाय षष्ठगोमुखाय सूर्यस्वरूपाय
सर्वरोगहराय मुक्तिदात्रे ॐॐॐॐॐॐॐ ॐ नमः स्वाहा ॥ १७॥

ॐ नमो भगवते सप्तवदनाय सप्तममानुषमुखाय रुद्रावताराय
अञ्जनीसुताय सकलदिग्यशोविस्तारकाय वज्रदेहाय सुग्रीवसाह्यकराय
उदधिलङ्घनाय सीताशुद्धिकराय लङ्कादहनाय अनेकराक्षसान्तकाय
रामानन्ददायकाय अनेकपर्वतोत्पाटकाय सेतुबन्धकाय कपिसैन्यनायकाय
रावणान्तकाय ब्रह्मचर्याश्रमिणे कौपीनब्रह्मसूत्रधारकाय रामहृदयाय
सर्वदुष्टग्रहनिवारणाय शाकिनीडाकिनीवेतालब्रह्मराक्षसभैरवग्रह-
यक्षग्रहपिशाचग्रहब्रह्मग्रहक्षत्रियग्रहवैश्यग्रह-
शूद्रग्रहान्त्यजग्रहम्लेच्छग्रहसर्पग्रहोच्चाटकाय मम
सर्व कार्यसाधकाय सर्वशत्रुसंहारकाय सिंहव्याघ्रादिदुष्टसत्वाकर्षकायै
काहिकादिविविधज्वरच्छेदकाय परयन्त्रमन्त्रतन्त्रनाशकाय
सर्वव्याधिनिकृन्तकाय सर्पादिसर्वस्थावरजङ्गमविषस्तम्भनकराय
सर्वराजभयचोरभयाऽग्निभयप्रशमनायाऽऽध्यात्मिकाऽऽधि-
दैविकाधिभौतिकतापत्रयनिवारणायसर्वविद्यासर्वसम्पत्सर्वपुरुषार्थ-
दायकायाऽसाध्यकार्यसाधकाय सर्ववरप्रदायसर्वाऽभीष्टकराय
ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ॐ नमः स्वाहा ॥ १८॥

य इदं कवचं नित्यं सप्तास्यस्य हनुमतः ।
त्रिसन्ध्यं जपते नित्यं सर्वशत्रुविनाशनम् ॥ १९॥

पुत्रपौत्रप्रदं सर्वं सम्पद्राज्यप्रदं परम् ।
सर्वरोगहरं चाऽऽयुःकीर्त्तिदं पुण्यवर्धनम् ॥ २०॥

राजानं स वशं नीत्वा त्रैलोक्यविजयी भवेत् ।
इदं हि परमं गोप्यं देयं भक्तियुताय च ॥ २१॥

न देयं भक्तिहीनाय दत्वा स निरयं व्रजेत् ॥ २२॥

नामानिसर्वाण्यपवर्गदानि रूपाणि विश्वानि च यस्य सन्ति ।
कर्माणि देवैरपि दुर्घटानि तं मारुतिं सप्तमुखं प्रपद्ये॥ २३॥

॥ इति श्रीअथर्वणरहस्येसप्तमुखीहनुमत्कवचं सम्पूर्णम् ॥